श्रीः

Fellowship Series No. 6

# कलाशाला पाठमाला

SANSKRIT TEXT FOR

(B.A., B.Sc., B.Com., B.B.A., B.B.M. B.C.A., B.E.S)

## UNIVERSITY OF MADRAS

"अर्थकरी च विद्या"

Published By : -

Fellowship of Sanskrit Culture

No. 37, (Old No. 16-A) Arangappan Street
(Near Sankara Mutt)
West Māmbalam Chennai - 600 033
Ph : 044 - 24852992

*Fellowship Series No: 6*

# कलाशालापाठमाला-II

**SANSKRIT TEXT**

**FOR**

**(B.Com., B.B.M., B.B.A., B.C.A., B.E.S.)**

**UNIVERSITY OF MADRAS**

**"अर्थकरी च विद्या"**

**Published by:**

**FELLOWSHIP OF SANSKRIT CULTURE**

No. 37, (Old No.16-A) Arangappan Street,
( Near Sankara Mutt )
West Mambalam, Chennai - 600 033.

First Edition: July - 2000

Copies: 2000



Price : Rs. 30/-

http://www/U.G.C/ac.in/tg-foreign.pdf.

**TEXT BOOK COMMITTEE**

Chief Editor :

**Dr. R. Thiagarajan**, M.A., Ph.D.,
Prof. & H.O.D. of Sanskrit, Presidency College,
Chennai - 600 005. Resi. Ph: 485 2992

Associate Editors :

**Smt. Jayalakshmi Balasubramanian**, M.A., M.Phil.,
Senior Lecturer in Sanskrit,
Anna Adarsh College for Women,
Chennai - 600040.

**Smt. R. Subasri Aravind**, M.A., M.Phil., B.Ed.,
Lecturer in Sanskrit,
M.O.P. Vaishnav College for Women (Evening),
Chennai - 600034.

**Smt. Raji Suresh**, M.A., M.Phil, B.Ed.,
Lecturer in Sanskrit,
Justice Basheer Ahmed Sayeed
Womens' College (Evening), Chennai - 600018.

# विषयसूचिका

## (Index)

आचार्यात्पादमादत्ते पादं शिष्यस्वमेधया ।
पादं सब्रह्मचारिभ्यः पादं कालक्रमेण च ॥

A student grasps a quarter from the teacher, another quarter through his own intelligence, another quarter from co-students and (the last) quarter with the passage of time.

# उपायशक्तिः

उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः ।
श्रृगालेन हतो हस्ती गच्छता पङ्कवर्त्मना ॥

आसीत् ब्रह्मारण्ये कर्पूरतिलको नाम हस्ती । तमवलोक्य सर्वे शृगालाः चिन्तयन्ति स्म, "यद्ययं केनाप्युपायेन म्रियते तदा अस्माकं एतद्देहेन मासचतुष्टयस्य स्वेच्छया भोजनं भविष्यति" इति । तत्रैकेन वृद्धशृगालेन प्रतिज्ञातं, "मम बुद्धिप्रभावादस्य मरणं साधयिष्यामि" इति ।

अनन्तरं सः वञ्चकः वृद्धशृगालः कर्पूरतिलकसमीपं गत्वा साष्टाङ्गपातं प्रणम्योवाच, "देव, दृष्टिप्रसादं कुरु ।" हस्ती अब्रवीत्, " कस्त्वम् ? कुतः समायातः?" सोऽवदत्, "जम्बुकोऽहम् । सर्वैर्वनवासिभिः पशुभिर्मिलित्वा भवत्सकाशं प्रस्थापितः । यद्विना राज्ञावस्थातुं न युक्तं तदत्राटवीराज्ये अभिषेक्तुं भवान् सर्वस्वामिगुणोपेतः

निरूपितः । यतः -

यः कुलाभिजनाचारैरतिशुद्धः प्रतापवान् ।
धार्मिको नीतिकुशलः स स्वामी युज्यते भुवि ॥

"तद्यथा लग्नवेला न विचलति तथा कृत्वा सत्वरमागम्यतां देवेन" इत्युक्त्वोत्थाय चलितः ।

ततोऽसौ राज्यलोभाकृष्टः कर्पूरतिलकः शृगालवर्त्मना धावन् महापङ्के निमग्नः । ततस्तेन हस्तिनोक्तं, "सखे, शृगाल, किमधुना विधेयम् ? पङ्के निपतितोऽहं म्रिये । परावृत्य पश्य" इति । वृद्धशृगालेन विहस्योक्तं, "देव, मम पुच्छकावलम्बनं कृत्वोत्तिष्ठ । यत् मद्विधस्य वचसि त्वया प्रत्ययः कृतः । तदनुभूयतामशरणं दुःखम्" इति ।

ततो महापङ्के निमग्नोऽयं कर्पूरतिलकः सर्वैः शृगालैर्भक्षितः ॥

(हितोपदेशः)

# श्री रामोदन्तम्

## ॥ सुन्दरकाण्डः ॥

अभिवाद्याथ सकलान् अमरान् पवनात्मजः ।
पुप्लुवे च गिरेस्तस्मात् विलङ्घयितुमर्णवम् ॥ 1 ॥

स तोषयित्वा मैनाकं सुरसामभिवाद्य च ।
निहत्य सिंहिकां नीत्या पारं प्राप महोदधेः ॥ 2 ॥

लङ्काधिदेवतां जित्वा तां प्रविश्यानिलात्मजः ।
सीतां विचिन्वन्नद्राक्षीत् निद्राणं निशि रावणम् ॥ 3 ॥

अपश्यंस्तत्र वैदेहीं विचिन्वानस्ततस्ततः ।
अशोकवनिकां गत्वा सीतां खिन्नां ददर्श सः ॥ 4 ॥

पादपं कञ्चिदारुह्य तत्पलाशैः सुसंवृतः ।
आस्ते स्म मारुतिस्तत्र सीतेयमिति तर्कयन् ॥ 5 ॥

रावणस्तु तदाऽभ्येत्य मैथिलीं मदनार्दितः ।
भार्या भव ममेत्येवं बहुधा समयाचत ॥ 6 ॥

अहं त्वदनुगा न स्याम् इत्येषा तं निराकरोत् ।
काममन्युपरीतात्मा रावणोऽथ गृहं ययौ ॥ 7 ॥

गते तु रावणे सीतां प्रलपन्तीं स मारुतिः ।
उक्त्वा रामस्य वृत्तान्तं प्रददौ चाङ्गुलीयकम् ॥ 8 ॥

तत् समादाय वैदेही विलप्य च भृशं पुनः ।
चूडामणिं ददौ तस्य करे सा मारुतेः प्रियम् ॥ 9 ॥

मा विषादं कृथा देवि राघवो रावणं रणे ।
हत्वा त्वां नेष्यतीत्येनामाश्वास्य स विनिर्ययौ ॥ 10 ॥

नीतिमान् सोऽपि सञ्चिन्त्य बभञ्जोपवनं च तत् ।
अक्षादीनि च रक्षांसि बहूनि समरेऽवधीत् ॥ 11 ॥

ततः शक्रजिता युद्धे बद्धः पवननन्दनः ।
प्रतापं रघुनाथस्य रावणाय न्यवेदयत् ॥ 12 ॥

रक्षोदीपितलाङ्गूलः स तु लङ्कामशेषतः ।
दग्ध्वा सागरमुत्तीर्य वानरान् समुपागमत् ॥ 13 ॥

स गत्वा वानरैः साकं राघवायात्मना कृतम् ।
निवेद्य सकलं कृत्यं ददौ चूडामणिं च तम् ॥ 14 ॥

इति श्रीरामोदन्ते सुन्दरकाण्डः समाप्तः ॥

# महाश्वेता

तत्र च शून्ये सिद्धायतने, भगवतश्चराचरगुरोः चतुर्मुखस्य त्र्यम्बकस्य दक्षिणां मूर्तिमाश्रित्य अभिमुखीमासीनाम्, हिमकरकिरणावदातवर्णां, प्रतिपन्नपाशुपतव्रतां कन्यकां चन्द्रापीडः ददर्श। ततोऽवतीर्य, तरुशाखायां बद्ध्वा तुरङ्गमम्, उपसृत्य, भगवते भक्त्या प्रणम्य त्रिलोचनाय, तामेव योषितमनिमेषपक्ष्मणा चक्षुषा निरूपयन्, तस्यामेव स्फटिकमण्टपिकायामन्यतमं स्तम्भमाश्रित्य समुपविष्टः गीतसमाप्त्यवसरं प्रतीक्षमाणस्तस्थौ ॥

अथ गीतावसाने मूकीभूतवीणा सा कन्यका समुत्थाय प्रदक्षिणीकृत्य कृतहरप्रणामा, परिवृत्य चन्द्रापीडमाबभाषे - 'स्वागतमतिथये, कथमिमां भूमिमनुप्राप्तो महाभागः ? उत्थायागम्यताम्, अनुभूयतामतिथिसत्कारः ''- इति।

एवमुक्तस्तु तया संभाषणमात्रेणैव अनुगृहीतमात्मानं मन्यमानः समुत्थाय कृतप्रणामः, 'भगवति । यथाज्ञापयसि' इत्यभिधाय दर्शितविनयः शिष्य इव तां व्रजन्तीमनुवव्राज ।

ततः स्वावासगुहां प्रविश्य वल्कलशयन-शिरोभागविन्यस्तवीणया तया विरचितसपर्यां शिलातलोपविष्टः सप्रश्रयं प्रतिजग्राह । द्वितीयशिलातलोपविष्टया तया क्रमेण परिपृष्टः, दिग्विजयादारभ्य किन्नरमिथुनानुसरणप्रसङ्गेन आगमनमात्मनः समाचचक्षे । विदितसकलवृत्तान्ता समुत्थाय सा कन्यका , शङ्खमयं भिक्षाकपालमादाय, आयतनतरुतलेषु विचचार । अचिरेण तस्याः स्वयंपतितैः फलैरपूर्यत्त भिक्षाभाजनम् । आगत्य च तेषामुपयोगाय नियुक्तवती चन्द्रापीडम् ।

दृष्ट्वैतत्, स राजकुमारः ''नास्ति खल्वसाध्यं नाम तपसाम्, किमतः परमाश्चर्यम्'' इति सविस्मयः समुत्थाय तमेव प्रदेशमिन्द्रायुधमानीय, नातिदूरे संयम्य निर्झरजलनिर्वर्ति-तस्नानविधिः तान्यमृतरसस्वादून्युपभुज्य फलानि, पीत्वा च प्रस्रवणजलम् उपस्पृश्यैकान्ते चावतस्थे ॥

अथ निर्वर्तितसन्ध्योचिताचारां परिसमापिताहारां शिलातले विस्रब्धमुपविष्टां तां निभृतमुपसृत्य नातिदूरे समुपविश्य, मुहूर्तमिव स्थित्वा चन्द्रापीडः सविनयमवादीत् - 'भगवति महत् खलु भवद्दर्शनात् प्रभृति मम कौतुकमस्मिन् विषये । कतरन् मरुतां ऋषीणां गन्धर्वाणामप्सरसां वा कुलमनुगृहीतं भगवत्या जन्मना ? किमर्थं वास्मिन्कुसुमसुकुमारे नवे वयसि व्रतग्रहणम् ? किन्निमित्तं वा वनमिदममानुषं एकाकिन्यधिवससि ? अपनयतु नः कुतूहलम् । आवेदयतु भवती सर्वम्'' - इति ।

एवमभिहिता सा किमप्यन्तर्ध्यायन्ती, तूष्णीं मुहूर्तमिव स्थित्वा दीर्घमुष्णं च निश्वस्य शनैः प्रत्यवादीत् - 'राजपुत्र किमनेन मम मन्दभाग्यायाः जन्मनः प्रभृति वृत्तान्तेन श्रुतेन । तथापि यदि महत् कुतूहलम्, तत्कथयामि, श्रूयताम् ।।

पुरा खलु भगवतो दक्षस्य प्रजापतेः अतिप्रभूतानां मध्ये कन्यकानां द्वे सुते मुनिररिष्टा च बभूवतुः । तत्र मुनेस्तनयश्चित्रसेनादीनां पञ्चदशानां भ्रातृणां षोडशश्चित्ररथो नाम समुत्पन्नः । स च प्रख्यातपराक्रमः सर्वेषां गन्धर्वाणामाधिपत्यं शैशव एवावाप्तवान् । इतश्च नातिदूरे हेमकूटो नाम पर्वतस्तस्य निवासः । तत्र च

तद्भुजयुगपरिपालितान्यनेकानि गन्धर्वशतसहस्राणि प्रतिवसन्ति । तेनैव चेदं चैत्ररथं नाम अतिमनोहरं काननं निर्मितम् । इदं चाच्छोदाभिधानं महत्सरः खानितम् ।

अरिष्टायास्तु पुत्रस्तुम्बुरुप्रभृतीनां षण्णां सोदर्याणां ज्येष्ठो हंसो नाम गन्धर्वः , तस्मिन् द्वितीये गन्धर्वकुले राज्यपदमासादितवान् । तस्यापि स एव गिरिरधिवासः । स च सोममयूखसम्भवादप्सरः कुलात् समुद्भूतां गौरी नाम कन्यकां प्रणयीनीमकरोत् ।

तयोश्च तादृशयोर्महात्मनोरहमीदृशी विगतलक्षणा शोकाय केवलमेकैव सुता समुत्पन्ना । तातस्त्वनपत्यतया सुतजन्मातिरिक्तेन महोत्सवेन मज्जन्माभिनन्द्य, दशमेऽहनि 'महाश्वेता' इत्यन्वर्थमेव नाम कृतवान् । सा अहम् ॥

(कादम्बरी)

भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती ।
तत्रापि मधुरं काव्यं तस्मादपि सुभाषितम् ॥ 1 ॥

कविः करोति काव्यानि लालयत्युत्तमो जनः ।
तरुः प्रसूते पुष्पाणि वायुर्वहति सौरभम् ॥ 2 ॥

गतेऽपि वयसि ग्राह्या विद्या सर्वात्मना बुधैः ।
यद्यपि स्यान्न फलदा सुलभा सान्यजन्मनि ॥ 3 ॥

उपकर्तुं यथा स्वल्पः समर्थो न तथा महान् ।
प्रायःकूपस्तृषां हन्ति सततं न तु वारिधिः ॥ 4 ॥

अहो खलभुजङ्गस्य विचित्रोऽयं वधक्रमः ।
अन्यस्य दशति श्रोत्रं अन्यः प्राणैर्वियुज्यते ॥ 5 ॥

कुरुते कार्यमच्छिद्रं तृणानामपि संहतिः ।
तालच्छत्रिकयादित्यः सप्रतापोऽपि वार्यते ॥ 6 ॥

यत्र नास्ति गतिर्वायोः रश्मीनां च विवस्वतः ।
तत्रापि प्रविशत्याशु बुद्धिर्बुद्धिमतां नृणाम् ॥ 7 ॥

गौरवं प्राप्यते दानान्न तु वित्तस्य संचयात् ।
स्थितिरुच्चैः पयोदानां पयोधीनामधः स्थितिः ॥ 8 ॥

कर्णस्त्वचं शिबिर्मांसं जीवं जीमूतवाहनः ।
ददौ दधीचिरस्थीनि नास्त्यदेयं महात्मनाम् ॥ 9 ॥

न दैवमपि संचिन्त्य त्यजेदुद्योगमात्मनः ।
अनुद्योगेन कस्तैलं तिलेभ्यः प्राप्तुमर्हति ॥ 10 ॥

विहाय पौरुषं यो हि दैवमेवावलम्बते ।
प्रासादसिंहवत्तस्य मूर्ध्नि तिष्ठन्ति वायसाः ॥ 11 ॥

काक आह्वयते काकान् याचकस्तु न याचकान् ।
काकयाचकयोर्मध्ये वरं काको न याचकः ॥ 12 ॥

लोभः सर्वात्मना त्याज्यो लोभो हि सुमहान्रिपुः।
द्वेषक्रोधादिजनको लोभः पापस्य कारणम्॥ 13॥

चित्ते भ्रान्तिर्जायते मद्यपानात्
भ्रान्ते चित्ते पापचर्यामुपैति।
पापं कृत्वा दुर्गतिं याति मूढः
तस्मान्मद्यं नैव पेयं न पेयम्॥ 14॥

न चोरहार्यं न च राजहार्यं
न भ्रातृभाज्यं न च भारकारि।
व्यये कृते वर्धत एव नित्यं
विद्याधनं सर्वधनप्रधानम्॥15॥

यस्यास्ति वित्तं स नरः कुलीनः
स पण्डितः स श्रुतवान्गुणज्ञः।
स एव वक्ता स च दर्शनीयः
सर्वेगुणाः काञ्चनमाश्रयन्ते॥ 16॥

वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः।
करणं परोपकरणं येषां केषां न ते वन्द्याः॥ 17॥.

आरभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥ 18 ॥

आरम्भगुर्वी क्षयिणी क्रमेण
लघ्वी पुरा वृद्धिमती च पश्चात् ।
दिनस्य पूर्वार्धपरार्धभिन्ना
छायेव मैत्री खलसज्जनानाम् ॥ 19 ॥

साहित्यसङ्गीतकलाविहीनः
साक्षात् पशुः पुच्छविषाणहीनः ।
तृणं न खादन्नपि जीवमानः
तद्भागधेयम् परमं पशूनाम् ॥ 20 ॥

वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे
न खलु स तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा ।
भवति हि पुनर्भूयान्भेदः फलं प्रति तद्यथा
प्रभवति शुचिर्बिम्बग्राहे मणिर्न मृदां चयः ॥ 21 ॥

अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः
कृतप्रयत्नोऽपि गृहे न जीवति ।। 22 ।।

वैचित्र्यमेव जगतो रुचिरं जनानां
एतद्गुणावगुणदर्शनमस्तु नाम ।
चन्द्रे कलङ्कमपि शैवलविद्धपद्मे
दोषं गुणं गणयतां जगदेकमूल्यम् ।। 23 ।।

अतिपरिचयादवज्ञा संततगमनादनादरो भवति ।
मलये भिल्लपुरन्ध्री चन्दनतरुकाष्ठमिन्धनं कुरुते ।। 24 ।।

# वैपरीत्यम्

अपि शास्त्रेषु कुशलाः लोकाचारविवर्जिताः ।
पुरुषा हास्यतां यान्ति यथा ते मूर्खपण्डिताः ॥

कस्मिंश्चिदधिष्ठाने चत्वारो विद्यार्थिनः बालाः परस्परं मित्रभावमापन्नाः प्रतिवसन्ति स्म । तेषां देशान्तरं गत्वा विद्यायाः आर्जनं कर्तव्यमिति मतिरजायत। अथैकस्मिन् दिने ते प्रस्थाय विद्योपार्जनार्थं कान्यकुब्जं गताः । तत्र शिवभट्टो नाम महापण्डितः एकः आचार्यः आसीत् । तमुपगम्य ते सविनयमवदन् , "गुरुवर्य, विद्यार्थिनः वयं विद्याध्ययनाय भवत्सकाशमागताः। कृपया भवान् विद्यां अध्यापयितुमर्हति" इति। प्रसन्नः शिवभट्टः तान् छात्रान् अङ्गीचकार।

ततो द्वादशाब्दान् यावदेकचित्ततया पठन्तः सर्वे ते विद्याकुशलाः सञ्जाताः । अथाचार्यानुज्ञामवाप्य स्वग्रामाय प्रस्थिताः ।

मध्येमार्गं द्वौ पन्थानौ मिलितौ। श्रान्तास्ते तत्रोपविष्टाः। मुहूर्तान्तरं तेष्वेकः पप्रच्छ, "केन मार्गेण गच्छामः" इति। तस्मिन्नेव समये तत्र प्रेतदहनार्थं श्मशानमुद्दिश्य ग्रामीणो महाजनो गतः। ततः चतुर्णामेकः स्वपुस्तकमुद्धाट्य एवमपठत्,

"महाजनो येन गतः स पन्थाः।" इति।. अथ स "महाजनमार्गेण गच्छामः" इत्याह।

बाढमित्युक्त्वा ते सर्वे श्मशानं प्राप्ताः। तत्र कञ्चन रासभं तिष्ठन्तं दृष्ट्वा तेषु द्वितीयः पुस्तकमवलोक्य अपठत्--

उत्सवे व्यसने चैव दुर्भिक्षे शत्रुसङ्कटे।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः॥ इति॥

सोऽवदत्, "अहो अयं गर्दभः अस्मदीयो बान्धवः" इति। तेषु कश्चित् तस्य रासभस्य ग्रीवायां लगति। कोऽपि पादौ प्रक्षालयति, अन्यः तस्य मुखं चुम्बति, अपरस्तु कुशलप्रश्ने त्वरितो बभूव।

अथ च यावत्ते दिशोऽवलोकयन्ति तावत् कश्चिद्उष्ट्रः त्वरितगतिः समागतः। तं दृष्ट्वा तैश्चोक्तं एतत्किमिति। तावत् तृतीयेन पुस्तकमुद्धाट्योक्तम्।

"धर्मस्य त्वरिता गतिः।"

अतोऽयं धर्मः। तावच्चतुर्थेनोक्तम् -

"इष्टं धर्मेण योजयेत्।"

अथ तैः सः रासभः उष्ट्रग्रीवायां निबद्धः। तदवलोक्य केनापि रजकस्याग्रे वृत्तान्तोऽयं कथितः। रजकोऽपि भीतः सत्वरं स्वजनैः समाजगाम। अपृच्छत् च तान्, "किमेवं कृतमिति। ते प्रोचुः, "यथा शास्त्रमनुष्ठितमिति। अत्रान्तरे प्रेतदाहकाः अपि तत्र समुदिताः। अथ सर्वे मिलित्वा "किं तच्छास्त्रम्?" इति पण्डितानपृच्छन्। ते पूर्वोक्तवचनानि पठित्वा तेषां अर्थं च उपन्यस्यन्ति स्म। तच्छ्रुत्वा ते सर्वे पण्डितानपि तान् मूर्खानलोकाचारज्ञान् मन्यमानाः परिजहसुः। ते च परिहसिता रासभोष्ट्रौ विहाय जग्मुः। अतोऽलोकज्ञाः पुरुषाः पाण्डित्यवन्तोऽपि हासपात्रं भवन्ति।

(पञ्चतन्त्रम्।)

[1]

अथाजिनाषाढधरः प्रगल्भवाग्ज्वलन्निव ब्रह्ममयेन तेजसा ।
विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमो यथा ॥

[2]

तमातिथेयी बहुमानपूर्वया सपर्यया प्रत्युदियाय पार्वती ।
भवन्ति साम्येऽपि निविष्टचेतसां वपुर्विशेषेष्वतिगौरवाः क्रियाः ॥

[3]

विधिप्रयुक्तां परिगृह्य सत्क्रियां परिश्रमं नाम विनीय च क्षणम् ।
उमां च पश्यन्नृजुनैव चक्षुषा प्रचक्रमे वक्तुमनुज्झितक्रमः ॥

[4]

अपि क्रियार्थं सुलभं समित्कुशं जलान्यपि स्नानविधिक्षमाणि ते ।
अपि स्वशक्त्या तपसि प्रवर्तसे शरीरमाद्यं खलु धर्मसाधनम् ॥

[5]

यदुच्यते पार्वति पापवृत्तये न रूपमित्यव्यभिचारि तद्वचः ।
तथाहि ते शीलमुदारदर्शने तपस्विनामप्युपदेशतां गतम् ॥

[6]

प्रयुक्तसत्कारविशेषमात्मना न मां परं संप्रतिपत्तुमर्हसि ।
यतः सतां सन्नतगात्रि सङ्गतं मनीषिभिः साप्तपदीनमुच्यते ॥

[7]

अतोऽत्र किञ्चिद्भवतीं बहुक्षमां द्विजातिभावादुपपन्नचापलः ।
अयं जनः प्रष्टुमनास्तपोधने न चेद्रहस्यं प्रतिवक्तुमर्हसि ॥

[8]

कुले प्रसूतिः प्रथमस्य वेधसस्त्रिलोकसौन्दर्यमिवोदितं वपुः ।
अमृग्यमैश्वर्यसुखं नवं वयस्तपः फलं स्यात्किमतः परं वद ॥

[9]

अलभ्यशोकाभिभवेयमाकृतिर्विमानना सुभ्रु कुतः पितुर्गृहे ।
पराभिमर्शो न तवास्ति कः करं प्रसारयेत्पन्नगरत्नसूतये ॥

[10]

दिवं यदि प्रार्थयसे वृथा श्रमः पितुः प्रदेशास्तव देवभूमयः ।
अथोपयन्तारमलं समाधिना न रत्नमन्विष्यति मृग्यते हि तत् ॥

[11]

निवेदितं निःश्वसितेन सोष्मणा मनस्तु मे संशयमेव गाहते ।
न दृश्यते प्रार्थयितव्य एव ते भविष्यति प्रार्थितदुर्लभः कथम् ॥

[ 12 ]

कियच्चिरं श्राम्यसि गौरि विद्यते ममापि पूर्वाश्रमसञ्चितं तपः ।
तदर्धभागेन लभस्व काङ्क्षितं वरं तमिच्छामि च साधु वेदितुम् ।।

[ 13 ]

इति प्रविश्याभिहिता द्विजन्मना मनोगतं सा न शशाक शंसितुम् ।
अथो वयस्यां परिपार्श्ववर्तिनीं विवर्तितानञ्जननेत्रमैक्षत ।।

[ 14 ]

सखी तदीया तमुवाच वर्णिनं निबोध साधो तव चेत्कुतूहलम् ।
यदर्थमम्भोजमिवोष्णवारणं कृतं तपः साधनमेतया वपुः ।।

[ 15 ]

इयं महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी ।
अरूपहार्यं मदनस्य निग्रहात्पिनाकपाणिं पतिमाप्तुमिच्छति ।।

[ 16 ]

यदा हि तस्याधिगमे जगत्पतेरपश्यदन्यं न विधिं विचिन्वती ।
तदा सहास्माभिरनुज्ञया गुरोरियं प्रपन्ना तपसे तपोवनम् ।।

[ 17 ]

न वेद्मि स प्रार्थितदुर्लभः कदा सखीभिरस्रोत्तरमीक्षितामिमाम् ।
तपः कृशामभ्युपपत्स्यते सखीं वृषेव सीतां तदवग्रहक्षताम् ।।

[ 18 ]

अगूढसद्भावमितीङ्गितज्ञया निवेदितो नैष्ठिकसुन्दरस्तया ।
अयीदमेवं परिहास इत्युमामपृच्छदव्यञ्जितहर्षलक्षणः ॥

[ 19 ]

यथा श्रुतं वेदविदां वर त्वया जनोऽयमुच्चैः पदलङ्घनोत्सुकः ।
तपः किलेदं तदवाप्तिसाधनं मनोरथानामगतिर्न विद्यते ॥

[ 20 ]

अथाह वर्णी विदितो महेश्वरस्तदर्थिनी त्वं पुनरेव वर्तसे ।
अमङ्गलाभ्यासरतिं विचिन्त्य तं तवानुवृत्तिं न च कर्तुमुत्सहे ॥

[ 21 ]

अवस्तुनिर्बन्धपरे कथं नु ते करोऽयमामुक्तविवाहकौतुकः ।
करेण शंभोर्वलयीकृताहिना सहिष्यते तत्प्रथमावलम्बनम् ॥

[ 22 ]

इयं च तेऽन्या पुरतो विडम्बना यदूढया वारणराजहार्यया ।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया महाजनः स्मेरमुखो भविष्यति ॥

[ 23 ]

द्वयं गत संप्रति शोचनीयतां समागमप्रार्थनया पिनाकिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥

[ 24 ]

वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु।
वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥

[ 25 ]

निवर्तयास्मादसदीप्सितान्मनः
क्व तद्विधस्त्वं क्व च पुण्यलक्षणा।
अपेक्ष्यते साधुजनेन वैदिकी
श्मशानशूलस्य न यूपसत्क्रिया ॥

[ 26 ]

उवाच चैनं परमार्थतो हरं न वेत्सि नूनं यत एवमात्थ माम्।
अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दाश्चरितं महात्मनाम् ॥

[ 27 ]

विपत्प्रतीकारपरेण मङ्गलं निषेव्यते भूतिसमुत्सुकेन वा ।
जगच्छरण्यस्य निराशिषः सतः किमेभिराशोपहतात्मवृत्तिभिः ॥

[ 28 ]

अकिञ्चनः सन्प्रभवः स संपदां त्रिलोकनाथः पितृसद्मगोचरः।
स भीमरूपः शिव इत्युदीर्यते न सन्ति याथार्थ्यविदः पिनाकिनः ॥

[ 29 ]

तदङ्गसंसर्गमवाप्य कल्पते ध्रुवं चिताभस्मरजोविशुद्धये ।
तथाहि नृत्याभिनयक्रियाच्युतं विलिप्यते मौलिभिरम्बरौकसाम् ।।

[ 30 ]

असंपदस्तस्य वृषेण गच्छतः प्रभिन्नदिग्वारणवाहनो वृषा ।
करोति पादावुपगम्य मौलिना विनिद्रमन्दाररजोऽरुणाङ्गुली ।।

[ 31 ]

विवक्षता दोषमपि च्युतात्मना
त्वयैकमीशं प्रति साधु भाषितम् ।
यमामनन्त्यात्मभुवोऽपि कारणं
कथं स लक्ष्यप्रभवो भविष्यति ।।

[ 32 ]

अलं विवादेन यथा श्रुतस्त्वया तथाविधस्तावदशेषमस्तु सः ।
ममात्र भावैकरसं मनः स्थितं न कामवृत्तिर्वचनीयमीक्षते ।।

[ 33 ]

निवार्यतामालि किमप्ययं वटुः पुनर्विवक्षुः स्फुरितोत्तराधरः ।
न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक् ।।

[ 34 ]

इतो गमिष्याम्यथवेति वादिनी चचाल बाला स्तनभिन्नवल्कला ।
स्वरूपमास्थाय च तां कृतस्मितः समाललम्बे वृषराजकेतनः ॥

[ 35 ]

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि–
निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥

[ 36 ]

अद्यप्रभृत्यवनताङ्गि तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ।
अह्नाय सा नियमजं क्लमसुत्ससर्ज
क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥

(कुमारसंभवम् - canto v)

# बान्धवस्नेहः

अथ दूरोदव लेखगर्भया रचितमुण्डमालम् कुरङ्गकनामानं आयान्तं देवो हर्षः अद्राक्षीत्। कुरङ्गकस्तु कृतप्रणामः समुपसृत्य हर्षं प्रथममानलग्नं विषादमुपनिन्ये, पश्चाल्लेखम्। तं च देवो हर्षः स्वयमेवादायावाचयत्। "कुरङ्गक, किं मान्द्यं तातस्य" इति चाभ्यधात्। स च "देव, दाहज्वरो महान्" इत्याचचक्षे। तदाकर्ण्य सहसा अभुक्त एव प्रस्थितस्य चास्य प्रदक्षिणेतरत्प्रयान्तो विनाशमुपस्थितं राजसिंहस्य हरिणाः प्रकटयांबभूवुः।

अन्यस्मिन्नहनि मध्यंदिने, विगतजयशब्दम्, अस्तमिततूर्यनादम्, उपसंहृतगीतम्, उत्सारितोत्सवम् अप्रसारितापणपण्यम्, अमङ्गलैरिव परिगृहीतम्, यातुधानैरिव विध्वस्तम्, कलिकालेनेव कबलितम्, पापपटलैरिब संछादितम्, शून्यमिव सुप्तमिव मुषितमिव मूर्च्छितमिव स्कन्धावारं समाससाद।

तुरगादवतीर्णश्च अभ्यन्तरान्निष्क्रामन्तं सुषेणनामानं वैद्यकुमारमप्राक्षीत् - "सुषेण, अस्ति तातस्य विशेषः, न वा ?" इति । सोऽब्रवीत्"– नास्तीदानीम् । यदि भवेत् कुमारं दृष्ट्वा इति ।

मन्दं मन्दं द्वारपालैः प्रणम्यमानश्च, दीयमानसर्वस्वम्, पूज्यमानकुलदैवतम्, प्रारब्धामृतचरुपचनक्रियम्, प्रवर्त्यमानग्रहशान्ति, प्रयतविप्रप्रस्तुतसंहिताजपम्, दुःखदीनवदनेन च प्रघणेषु बद्धमण्डलेन उपांशुव्याहृतैः केनचिच्चिकित्सकदोषानुद्भावयता केनचिद्दुःस्वप्नानावेदयता केनचित्पिशाचवार्तां विवृण्वता केनचित्कार्तान्तिकादेशान् प्रकाशयता अन्येन दैवमुपालभमानेन अपरेण धर्माय कुप्यता बाह्यपरिजनेन कथ्यमानकष्टपार्थिवावस्थं राजकुलं विवेश ।

अवनिपतिस्तु दूरादेव दृष्ट्वातिदयितं तनयम्, प्रधावमानो मनसा प्रसार्य भुजौ "एह्येहि" इत्याह्वयन् शरीरार्धेन शयनादुदगात् । ससंभ्रममुपसृतं चैनं विनयावनम्रं उन्नमय्य बलादुरसि निवेश्य अङ्गैरङ्गानि पीडयन् विस्मृतज्वरसंज्वरः सुचिरमालिलिङ्ग । कथं कथमपि चिराद्विमुक्तं विगतनिमेषनिश्चलेन चक्षुषा व्यलोकयत् । पस्पर्श च पुनः पुनर्वेपथुमता पाणितलेन । क्षयक्षामकण्ठश्च कृच्छ्रादिवावादीत्

''वत्स, कृशोऽसि'' इति। भण्डिस्त्वकथयत् - '' देव अद्य तृतीयमहः कृताहारस्यास्याद्य'' इति ॥

तत् श्रुत्वा बाष्पवेगनिगृह्यमाणाक्षरं कथंकथमप्यायतं निःश्वस्य उवाच-''वत्स, जानामि त्वां पितृप्रियं अतिमृदुहृदयम्। ईदृशेषु विधुरयति धीमतोऽपि धियम् अतिदुर्धरो बान्धवस्नेहः सर्वप्रमाथी। अतो नार्हस्यात्मानं शुचे दातुम्। सुखं च राज्यं च वंशश्च प्राणाश्च त्वयि मे स्थिताः। यथा मम, तथा सर्वासां प्रजानाम्। त्वद्विधानां पीडाः पीडयन्ति सकलमेव भुवनतलम्। नह्यल्पपुण्यभाजां वंशम् अलंकुर्वन्ति भवादृशाः। फलमस्यानेकजन्मान्तरोपार्जितस्य अकलुषस्य कर्मणः। करतलगतमिव कथयन्ति चतुर्णामप्यर्णवानामाधिपत्यं ते लक्षणानि। त्वज्जन्मनैव कृतार्थोऽस्मि। निरभिलाषोऽस्मि जीवितव्ये। भिषगनुरोधः पाययति मामौषधम्।

अपि च सर्वप्रजापुण्यैः सकलभुवनतलपरिपालनार्थम् उत्पत्स्यमानानां भवादृशां जन्मग्रहणोपायः पितरौ। प्रजाभिस्तु बन्धुमन्तो राजानः, न ज्ञातिभिः। तदुत्तिष्ट। कुरु पुनरेव सर्वाः क्रियाः। कृताहारे च त्वयि अहमपि स्वयमुपयोक्ष्ये पथ्यम्'' इति ॥

(हर्षचरितम्)

भवन्ति नम्रास्तरवः फलोद्गमैः
नवाम्बुभिर्दूरविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥ 1 ॥

न सा सभा यत्र न सन्ति वृद्धाः
वृद्धा न ते ये न वदन्ति धर्मम् ।
धर्मो न वै यत्र च नास्ति सत्यं
सत्यं न तद्यच्छलनानुविद्धम् ॥ 2 ॥

आशा नाम मनुष्याणां काचिदाश्चर्यभृङ्खला ।
यया बद्धाः प्रधावन्ति मुक्ताः तिष्ठन्ति पङ्गुवत् ॥ 3 ॥

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ 4 ॥

रथस्यैकं चक्रं भुजगयमिताः सप्ततुरगाः
निरालम्बो मार्गश्चरणविकलः सारथिरपि ।
रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः
क्रियासिद्धिः सत्वे भवति महतां नोपकरणे ॥ 5 ॥

बलोपपन्नोऽपि हि बुद्धिमान्नरः
परं नयेन्न स्वयमेव वैरिताम् ।
भिषङ्ममास्तीति विचिन्त्य भक्षये–
दकारणात्को हि विचक्षणो विषम् ॥ 6 ॥

जीवनग्रहणे नम्राः गृहीत्वा पुनरुन्नताः ।
किं कनिष्ठाः किमु ज्येष्ठाः घटीयन्त्रस्य दुर्जनाः ॥ 7 ॥

मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः ।
पङ्कच्छिदः फलस्येव निकषेणाविलं पयः ॥ 8 ॥

आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ 9a ॥

इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ 9b ॥

संमोहयन्ति संपत्सु तापयन्ति विपत्सु च।
खेदयत्यर्जने काले कदा भोगाः सुखावहाः ॥ 10 ॥

क्वचिद् भूमौ शायी क्वचिदपि च पर्यङ्कशयनः
क्वचिच्छाकाहारी क्वचिदपि च मांसोदनरुचिः ।
क्वचित् कन्थाधारी क्वचिदपि विचित्राम्बरधरो
मनस्वी कार्यार्थी गणयति न दुःखं न च सुखम् ॥11॥

गुणेषु यत्नः क्रियतां किमाटोपैः प्रयोजनम् ।
विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥ 12 ॥

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः ।
अक्रोधस्तपसः क्षमा प्रभवतो धर्मस्य निर्व्याजता
सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥ 13॥

काष्ठादग्निर्जायते मथ्यमानात्
भूमिस्तोयं खन्यमाना ददाति ।
सोत्साहानां नास्त्यसाध्यं नराणां
मार्गारब्धाः सर्वयत्नाः फलन्ति ॥ 14 ॥

दाक्षिण्यं स्वजने दया परिजने शाठ्यं सदा दुर्जने
प्रीतिः साधुजने नयो नृपजने विद्वज्जने चार्जवम्।
शौर्यं शत्रुजने क्षमा गुरुजने कान्ताजने धृष्टता
ये चैवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः ॥ 15

गवादीनां पयोऽन्येद्युः सद्यो वा दधि जायते।
क्षीरोदधेस्तु नाद्यापि महतां विकृतिः कुतः ॥ 16 ॥

अतिव्ययोऽनवेक्षा च तथार्जनमधर्मतः।
मोक्षणं दूरसंस्थानं कोषव्यसनमुच्यते ॥17 ॥

अज्ञेभ्यो ग्रन्थिनो श्रेष्ठाः ग्रन्थिभ्यो धारिणो वराः।
धारिभ्यो ज्ञानिनः श्रेष्ठाः ज्ञानिभ्यो व्यवसायिनः ॥18 ॥

प्राणानां परिरक्षणाय सततं सर्वाः क्रियाः प्राणिनां
प्राणेभ्योऽभ्यधिकं समस्तजगतां नास्त्येव किञ्चित् प्रियम्।
पुण्यं तस्य न शक्यते गणयितुं यः पूर्णकारुण्यवान्
प्राणानाभयं ददाति सुकृती तेषामहिंसाव्रतम् ॥19 ॥

उत्तमं स्वार्जितं वित्तं मध्यमं पितुरार्जितम्।
अधमं भ्रातृवित्तं च स्त्रीवित्तमधमाधमम् ॥ 20 ॥

परोऽपि हितवान् बन्धुर्बन्धुरप्यहितः परः ।
अहितो देहजो व्याधिर्हितमारण्यमौषधम् ॥ 21 ॥

परपरिवादः परिषदि न कस्यचित्पण्डितेन वक्तव्यः ।
सत्यमपि तन्न वाच्यं यदुक्तमसुखावहं भवति ॥ 22 ॥

न देवाः यष्टिमादाय रक्षन्ति पशुपालवत् ।
यं तु रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम् ॥ 23 ॥

पापान्निवारयति योजयते हिताय
गुह्यं निगूहति गुणान्प्रकटीकरोति ।
आपद्गतश्च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ 24 ॥

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्धन्ते आयुर्विद्या यशो बलम् ॥ 25 ॥

चन्द्रः क्षयी प्रकृतिवक्रतनुः कलङ्की
दोषाकरः स्फुरति मित्रविपत्तिकाले ।
मूर्ध्ना तथापि सततं ध्रियते हरेण
नैवाश्रितेषु महतां गुणदोषचिन्ता ॥ 26 ॥

आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं
तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः ।
शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते
जीवे वारितरङ्गचञ्चलतरे सौख्यं कुतः प्राणिनाम् ।। 27 ।।

श्रियः प्रदुग्धे विपदो रुणद्धि
यशांसि सूते मलिनं प्रमार्ष्टि ।
संस्कारशौचेन परं पुनीते
शुद्धा हि बुद्धिः किल कामधेनुः ।। 28 ।।

क्षीरेणात्मगतोदकाय हि गुणाः दत्ता पुरा तेऽखिलाः
क्षीरे तापमवेक्ष्य तेन पयसा स्वात्मा कृशानौ हुतः ।
गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्रापदं
युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ।। 29 ।।

अम्भोजिनीवनविहारविलासमेव
हंसस्य हन्ति नितरां कुपितो विधाता ।
न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां
वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः ।। 30 ।।

# संस्कृतप परिचयकरणम्

# THE SANSKRIT ALPHABET

## VOWELS

### Simple :

Short : ह्रस्व:

अ a, इ i, उ u ,

ऋ ṛ, लृ ḷ,

Long : दीर्घ:

आ ā, ई ī, ऊ ū, ॠ ṝ

### Conjunct :

**Long :** दीर्घ :

ए ē, ऐ ai, ओ ō, औ au

अ, आ, इ, ई, उ, ऊ

ऋ, ॠ, लृ, ए, ऐ

ओ, औ, अं, अ:

## CONSONANTS

1. Gutturals : क ka ख kha ग ga घ gha ङ ṅa ( कवर्ग: )

2. Palatals : च ca छ cha ज ja झ jha ञ ña (चवर्ग:)

3. Linguals : ट ṭa ठ ṭha ड ḍa ढ ḍha ण ṇa(टवर्ग:)

4. Dentals : त ta थ tha द da ध dha न na(तवर्ग:)

5. Labials : प pa फ pha ब ba भ bha म ma(पवर्ग:)

6. Semivowels : य (pal.) ya र (ling) ra
ल (dent.) la व (dento - lab) va
ळ ( ள, ழ ) (अन्तस्थवर्ण:)

7. Sibilants : श (pal.) śa ष (ling) ṣa
स (sental) sa (ऊष्मवर्ण:)

8. Aspirate : ह ha (महाप्राणोच्चार:)

The consonants are also divided into **hard and soft :**

☞ The **hard consonants** are -

क्, ख्, च्, छ्, ट्, ठ्, त्, थ्, प्, फ्, श्, ष्, स्

☞ The **soft consonants** are -

ग्, घ्, ङ्, ज्, ड्, ढ्, ण्, द्, ध्, न्, ब्, भ्, म् य्, र्, ल्, व्, ह्

☞ The **soft consonants** include the five nasals(अनुनासिक - s)

ङ्, ञ्, ण्, न्, म्,

☞ क्ष्, and ज्ञ् are conjunct consonants for क् & ष् and ज् and ञ् respectively

☞ The अनुस्वार - अं is shown by a dot on the vowel with which it goes and the विसर्ग: is shown by two dots, one below the other, after the vowel with which it goes.

☞ Letters like क, का etc. are formed by joining the consonants with vowels.

## TABLE OF COMPOUND LETTERS

–, ा, ि, ी, ु, ू, ृ, ॢ, े, ै, ो, ौ, ं, :

☞ These are the vowel symbols to be affixed and prefixed to the consonants which form the table of compound letters as will be seen here under

क, का, कि, की, कु, कू, कृ, क्लृ,

के, कै, को कौ, कं, क:

This is to be applied to all other consonant letters

# CONJUNCT CONSONANTS

☞ Conjunct consonants are formed by adding one or more consonants to a consonant.

| | | |
|---|---|---|
| क् - k | र्ख - rkha | र्घ - rgha |
| क्क - kka | ग् - g | च - c, |
| क्त - kta | ग्ग - gga | च्च - cca |
| क्न - kna | ग्द - gda | च्छ - ccha |
| क्म - kma, | ग्ध - gdha | च्न - cna |
| क्य - kya | ग्न - gna | च्म - cma |
| क्र - kra | ग्म - gma | च्य - cya |
| क्ल - kla | ग्य - gya | च्र - cra |
| क्व - kva | ग्र - gra | च्ल - cla |
| क्त्य - ktya | ग्ल - gla | च्व - cva |
| क्त्र - ktra | ग्व - gva | र्च - rca |
| क्त्व - ktva | ग्र्य - grya | ज्ज - jja |
| र्क - rka | र्ग - rga | ज्न - jna |
| ख्न - khna | घ्न - ghna | ज्म - jma |
| ख्म - khma | घ्म - ghma | ज्य - jya |
| ख्य - khya | घ्य - ghya | ज्र - jra |
| ख्र - khra | घ्र - ghra | ज्ञ - jña |
| ख्व - khva | घ्व - ghva | ज्व - jva |

र्ज – rja
झ्य – jhya
झ्र – jhra
ट् – ṭ
ट्ट – ṭṭa
ट्य - ṭya
ट्र - ṭra
ठ्य - ṭhya
ड् - ḍ
ड्ड - ḍḍa
ड्य - ḍya
ड्र – ḍra
ड्व - ḍva
ण् - ṇ
ण्क - ṇka
ण्ड - ṇḍa
ण्ण - ṇṇa
ण्म - ṇma
ण्य - ṇya
ण्व - ṇva
ण्ह - ṇha
र्ण - rṇa
त् - t

त्क - tka
त्त - tta
त्न - tna
त्म - tma
त्प - tpa
त्य - tya
त्र - tra
त्ल - tla
त्व - tva
त्स - tsa
र्त - rta
त्प्र - tpra
त्म्य - tmya
त्र्य - trya
त्स्न - tsna
थ्य - thya
थ्र - thra
थ्व - thva
र्थ - rtha
द् - d
द्ग - dga
द्द - dda
द्ध - ddha
द्न - dna
द्ब - dba
द्भ - dbha

द्म - dma
द्य - dya
द्र - dra
द्व - dva
र्द - rda
द्ब्र - dbra
ध्न - dhna
ध्म - dhma
ध्य - dhya
ध्र - dhra
ध्ल - dhla
ध्व - dhva
र्ध - rdha
न् - n
न्क - nka
न्त - nta
न्द - nda
न्ध - ndha
न्न - nna
न्म – nma
न्र - nra

न्ल - nla
न्व - nva
प् - p
प्त - pta
प्न - pna,
प्म - pma
प्य - pya
प्र - pra
प्ल - pla
प्व - pva
प्स - psa
र्प - rpa
फ्न - phna
फ्र - phra
फ्ल - phla
ब् - b
ब्ज - bja
ब्द - bda
ब्ध - bdha
ब्ब - bbha
ब्य - bya
ब्र - bra
ब्ल - bla

ब्व - bva
र्ब - rba
भ्न - bhna
भ्य - bhya
भ्र - bhra
भ्व - bhva
र्भ - rbha
म् - m
म्न - mna
म्म - mma
म्य - mya
म्र - mra
म्ल - mla
र्म - rma
य्य - yya,
य्व - yva
र्य - rya
र् - r
र्न - rna
र्र - rra
र्ल - rla
र्व - rva
ल् - l

ल्क - lka
ल्त - lta
ल्न - lna
ल्प - lpa
ल्म - lma
ल्य - lya
ल्ल - lla
ल्व - lva
व् - v
व्न - vna
व्य - vya
व्र - vra
व्ल - vla
व्व - vva
र्व - rva
श् - ś
श्च - śca
श्छ - ścha
श्न - śna
श्म - śma
श्य - śya
श्र - śra
श्ल - śla
श्व - śva

| | | |
|---|---|---|
| र्श | - | rśa |
| ष् | - | ṣ |
| ष्क | - | ṣka |
| ष्ट | - | ṣṭa |
| ष्ण | - | ṣṇa |
| ष्प | - | ṣpa |
| ष्म | - | ṣma |
| ष्य | - | ṣya |
| ष्र | - | ṣra |
| ष्ल | - | ṣla |
| ष्व | - | ṣva |
| र्ष | - | rṣa |
| ष्ट्य | - | ṣṭya |
| ष्ट्र | - | ṣṭra |

| | | |
|---|---|---|
| स् | - | s |
| स्क | - | ska |
| स्त | - | sta |
| स्थ | - | stha |
| स्न | - | sna |
| स्प | - | spa |
| स्म | - | sma |
| स्य | - | sya |
| र्स | - | rsa |
| स्ल | - | sla |
| स्व | - | sva |
| स्त्र | - | stra |
| स्मृ | - | smṛ |

| | | |
|---|---|---|
| ह्न | - | hna |
| ह्म | - | hma |
| ह्य | - | hya |
| ह्र | - | hra |
| ह्व | - | hva |
| र्ह | - | rha |
| ह्न्य | - | hnya |
| ळ्य | - | ḷya |
| क्ष्ण | - | kṣṇa |
| क्ष्म | - | kṣma |
| क्ष्य | - | kṣya |
| क्ष्म्य | - | kṣmya |

# MODEL QUESTION PAPER

Time : 3 Hours Maximum : 100 Marks

## PART - A (10 X 3 = 30 MARKS)

**Answer any 10 Questions**

**All Questions carry equal Marks**

(Each answer shoud not exceed 50 words
(roughly 1/4 page)

1. स स्वामी युज्यते भुवि who ?
2. अनुभूयतामतिथिसत्कार: - Who said this ? To Whom ?
3. Explain the method of killing by the wicked men ?
4. What is the moral of the story 'vaiparithyam ?
5. तेष्वेव लोकस्थिति: - For whom ?
6. चत्वारि तस्य वर्धन्ते - What ? For Whom ?
7. All the qualities go after gold - Justify
8. Explain the term 'पञ्च तन्त्रम्'
9. मूर्ध्नि तिष्ठन्ति वायसा:- For whom ?
10. "Even there It can gain entry." Explain
11. Describe the friendship with bad and good people
12. शीलं परं भूषणम् - Explain.

## (PART - B) (5 x 6 = 30 Marks)

**Answer any Five questions**

All questions carry equal marks

Each answer should not exeed 200 words (roughly 1 page)

**13. Annotate any two :**

a. नास्ति खल्वसाध्यं नाम तपसाम् ।

b. महाजनमार्गेण गच्छामः ।

c. देव ! दाहज्वरो महान् ।

**14. Explain fully :**

रथस्यैकं चक्रं भुजगयमिताः सप्ततुरगाः
निरालम्बो मार्गश्चरणविकलः सारथिरपि ।
रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः ।
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥

or

न चोरहार्यं न च राजहार्यं
न भ्रातृभाज्यं न च भारकारि ।
व्यये कृते वर्धत एव नित्यं
विद्याधनं सर्वधनप्रधानम् ॥

15) **Fill in the blanks with suitable case forms**

a. पुत्राः_____________ (जनक) नमन्ति ।

b._____________ (युष्मद्) गृहं कुत्र अस्मि ?

c. त्वं _____________ (अस्मद्) किं यच्छसि ?

d. _____________ (राम) उपरि पुष्पवर्षं अपतत।

e. नमः_____________ (आचार्य)

f. पान्थः_____________ (वृक्ष) अधः उपविशति ।

16. **Conjugate fully (any three)**

a. वद् (present) b. लिख् (future)

c. पठ् (imperative) d. गम् (part)

17. **Change the voice (any three)**

a. अहं पत्रं लिखामि ।

b. ते फलानि स्वादन्ति ।

c. मक्ता: देवं नमन्ति ।

d. बालकः कन्दुकं क्षिपति ।

18. **Change the tense.**

a. बालकः नगरं गच्छति (past)

b. अहं सत्यं एव अवदम् (future)

c. विषय: (स्म) (past passive participle)

d. रमा कार्यालयम् गच्छति (imperative)

19. **Write Short Notes on <u>any three:-</u>**

a. दैवम् b. कुरङ्गक: c. हितोपदेश: d. वृद्ध श्रृगाल:

**Part - C (4 x 10 = 40 Marks)**

Answer any Four questions without omitting Q. No. 25.

**All Questions carry equal marks. Answers should not exceed 500 words (Roughly 2½ pages)**

20. Summarise the story presented from पञ्चतन्त्रम्

21. Elaborate upon the Conversation between चन्द्रपीड: and महाश्वेता ।

22. What was the advice given by king Prabhakara Vardhana to his son ? Why ?

23. Summarise the contents of the prescribed portion of हितोपदेश -

24. Summarise any 6 moral sayings

25. **Translate : (a) in to sanskrit (any five)**

i) The cow gives milk

ii) A monkey sits on a tree

iii) Gopal gives a fruit to a friend

iv) We write with pen

v) A boy goes to shcool

vi) He brings water from the river

26) **Translate into English (any five)**

i) तस्या: लेखनी कुत्र अस्मि ?

ii) मम, गृहस्य, समीपे, उद्यानम् अस्ति ।

iii) अहं ह्य: देवालय आगच्चम् ।

iv) राम: बृन्दं जनकं नमति ।

v) मथा आनितं पुस्तम् स: स्वीकरोति ।

vi) ते विश्व विद्यालयात् गृहम् आगच्छन्ति ।

---